# पितृस्तोत्रं पितृस्तुतिः

{॥ पितृस्तुति ॥}

श्रीगारुडे महापुराणे पितृस्तोत्रे रुचिस्तोत्रं नाम

ऊननवतितमोऽध्यायान्तर्गतम् ।

रुचिरुवाच ।

नमस्येऽहं पितॄन्भक्त्या ये वसन्त्यधिदेवतम् । var देवताः

देवैरपि हि तर्प्यन्ते ये श्राद्धेषु स्वधोत्तरैः ॥ १॥ १,८९.१३

नमस्येऽहं पितॄन्स्वर्गे ये तर्प्यन्ते महर्षिभिः ।

श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥ २॥ १,८९.१४

नमस्येऽहं पितॄन्स्वर्गे सिद्धाः सन्तर्पयन्ति यान् ।

श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥ ३॥ १,८९.१५

नमस्येऽहं पितॄन्भक्त्या येऽर्च्यन्ते गुह्यकैर्दिवि ।

तन्मयत्वेन वाञ्छद्भिरृद्धिमात्यन्तिकीं पराम् ॥ ४॥ १,८९.१६

नमस्येऽहं पितॄन्मर्त्यैरर्च्यन्ते भुवि ये सदा ।

श्राद्धेषु श्रद्धयाभीष्टलोकपुष्टिप्रदायिनः ॥ ५॥ १,८९.१७

नमस्येऽहं पितॄन्विप्रैरर्च्यन्ते भुवि ये सदा ।

वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥ ६॥ १,८९.१८

नमस्येऽहं पितॄन्ये वै तर्प्यन्तेऽरण्यवासिभिः ।
वन्यैः श्राद्धैर्यताहारैस्तपोनिर्धूतकल्मषैः ॥ ७॥ १,८९.१९

नमस्येऽहं पितॄन्विप्रैर्नैष्ठिकैर्धर्मचारिभिः ।
ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ॥ ८॥ १,८९.२०

नमस्येऽहं पितॄञ्छ्राद्धै राजन्यास्तर्पयन्ति यान् ।
कव्यैरशेषैर्विधिवल्लोकद्वयफलप्रदान् ॥ ९॥ १,८९.२१

नमस्येऽहं पितॄन्वैश्यैरर्च्यन्ते भुवि ये सदा ।
स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥ १०॥ १,८९.२२

नमस्येऽहं पितॄञ्छ्राद्धे शूद्रैरपि च भक्तितः ।
सन्तर्प्यते जगत्कृत्स्नं नाम्ना ख्याताः सुकालिनः ॥ ११॥ १,८९.२३

नमस्येऽहं पितॄञ्छ्राद्धे पाताले ये महासुरैः ।
सन्तर्प्यन्ते सुधाहारास्त्यक्तदम्भमदैः सदा ॥ १२॥ १,८९.२४

नमस्येऽहं पितॄञ्छ्राद्धैरर्च्यन्ते ये रसातले ।
भोगैरशेषैर्विधिवन्नागैः कामानभीप्सुभिः ॥ १३॥ १,८९.२५

नमस्येऽहं पितॄञ्छ्राद्धैः सर्पैः सन्तर्पितान्सदा ।
तत्रैव विधिवन्मन्त्रभोगसम्पत्समन्वितैः ॥ १४॥ १,८९.२६

पितॄन्नमस्ये निवसन्ति साक्षाद्ये देवलोकेऽथ महीतले वा ।
तथाऽन्तरिक्षे च सुरारिपूज्यास्ते वै प्रतीच्छन्तु मयोपनीतम् ॥ १५॥ १,८९.२७

पितॄन्नमस्ये परमार्थभूता ये वै विमाने निवसन्त्यमूर्ताः ।
यजन्ति यानस्तमलैर्मनोभिर्योगीश्वराः क्लेशविमुक्तिहेतून् ॥ १६॥ १,८९.२८

पितॄन्नमस्ये दिवि ये च मूर्ताः स्वधाभुजः काम्यफलाभिसन्धौ ।
प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु ॥ १७॥ १,८९.२९

तृप्यन्तु तेऽस्मिन्पितरः समस्ता इच्छावतां ये प्रदिशन्ति कामान् ।
सुरत्वमिन्द्रत्वमितोऽधिकं वा गजाश्वरत्नानि महागृहाणि ॥ १८॥ १,८९.३०

सोमस्य ये रश्मिषु येऽर्कबिम्बे शुक्ले विमाने च सदा वसन्ति ।
तृप्यन्तु तेऽस्मिन्पितरोऽन्नतोयैर्गन्धादिना पुष्टिमितो व्रजन्तु ॥ १९॥ १,८९.३१

येषां हुतेऽग्नौ हविषा च तृप्तिर्ये भुञ्जते विप्रशरीरसंस्थाः ।
ये पिण्डदानेन मुदं प्रयान्ति तृप्यन्तु तेऽस्मिन्पितरोऽन्नतोयैः ॥ २०॥ १,८९.३२

ये खड्गमांसेन सुरैरभीष्टैः कृष्णैस्तिलैर्दिव्य मनोहरैश्च ।

कालेन शाकेन महर्षिवर्यैः सम्प्रीणितास्ते मुदमत्र यान्तु ॥ २१॥ १,८९.३३

कव्यान्यशेषाणि च यान्यभीष्टान्यतीव तेषां मम पूजितानाम् ।
तेषाञ्च सान्निध्यमिहास्तु पुष्पगन्धाम्बुभोज्येषु मया कृतेषु ॥ २२॥ १,८९.३४

दिनेदिने ये प्रतिगृह्णतेऽर्चां मासान्तपूज्या भुवि येऽष्टकासु ।
ये वत्सरान्तेऽभ्युदये च पूज्याः प्रयान्तु ते मे पितरोऽत्र तुष्टिम् ॥ २३॥ १,८९.३५

पूज्या द्विजानां कुमुदेन्दुभासो ये क्षत्रियाणां ज्वलनार्कवर्णाः ।
तथा विशां ये कनकावदाता नीलीप्रभाः शूद्रजनस्य ये च ॥ २४॥ १,८९.३६

तेऽस्मिन्समस्ता मम पुष्पगन्धधूपाम्बुभोज्यादिनिवेदनेन ।
तथाऽग्निहोमेन च यान्ति तृप्तिं सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥ २५॥ १,८९.३७

ये देवपूर्वाण्यभितृप्तिहेतोर श्नन्ति कव्यानि शुभाहृतानि ।
तृप्ताश्च ये भूतिसृजो भवन्ति तृप्यन्तु तेऽस्मिन्प्रणतोऽस्मि तेभ्यः ॥ २६॥ १,८९.३८

रक्षांसि भूतान्यसुरांस्तथोग्रान्निर्णाशयन्तु त्वशिवं प्रजानाम् ।
आद्याः सुराणाममरेशपूज्यास्तृप्यन्तु तेऽस्मिन्प्रणतोऽस्मितेभ्यः ॥ २७॥ १,८९.३९

अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ।
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन्पितरस्तर्पिता मया ॥ २८॥ १,८९.४०

अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।

तथा बर्हिषदः पान्तु याम्यां मे पितरः सदा ।

प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ॥ २९॥ १,८९.४१

रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।

सर्वतः पितरो रक्षां कुर्वन्तु मम नित्यशः ॥ ३०॥ १,८९.४२

विश्वो विश्वभुगाराध्यो धर्मो धन्यः शुभाननः ।

भूतिदो भूतिकृद्भूतिः पितृणां ये गणा नव ॥ ३१॥ १,८९.४३

कल्याणः कल्यदः कर्ता कल्यः कल्यतराश्रयः ।

कल्यताहेतुरन्घः षडिमे ते गणाः स्मृताः ॥ ३२॥ १,८९.४४

वरो वरेण्यो वरदस्तुष्टिदः पुष्टिदस्तथा ।

विश्वपाता तथा धाता सप्तैते च गणाः स्मृताः ॥ ३३॥ १,८९.४५

महान्महात्मा महितो महिमावान्महाबलः ।

गणाः पञ्च तथैवैते पितृणां पापनाशनाः ॥ ३४॥ १,८९.४६

सुखदो धनदश्चान्यो धर्मदोऽन्यश्च भूतिदः ।

पितृणां कथ्यते चैव तथा गणचतुष्टयम् ॥ ३५॥ १,८९.४७

एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलं जगत् ।

त एवात्र पितृगणास्तुष्यन्तु च मदाहितात् ॥ ३६॥ १,८९.४८

माक्रण्डेय उवाच ।

एवं तु स्तुवतस्तस्य तेजसोराशिरुच्छ्रितः ।

प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ॥ ३७॥ १,८९.४९

तद्दृष्ट्वा सुमहत्तेजः समाच्छाद्य स्थितं जगत् ।

जानुभ्यामवनीं गत्वा रुचिः स्तोत्रमिदञ्जगौ ॥ ३८॥ १,८९.५०

रुचिरुवाच ।

अर्चितानाममूर्तानां पितृणां दीप्ततेजसाम् ।

नमस्यामि सदा तेषां ध्यानिनां दिव्यचक्षुषाम् ॥ ३९॥ १,८९.५१

इन्द्रादीनां च नेतारो दक्षमारीचयोस्तथा ।

सप्तर्षीणां तथाऽन्येषां तान्नमस्यामि कामदान् ॥ ४०॥ १,८९.५२

मन्वादीनां च नेतारः सूर्याचन्द्रमसोस्तथा ।

तान्नमस्याम्यहं सर्वान्पितृनप्युदधावपि ॥ ४१॥ १,८९.५३

नक्षत्राणां ग्रहाणां च वाय्वग्न्योर्नभसस्तथा ।

द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥ ४२॥ १,८९.५४

प्रजापतेः कश्यपाय सोमाय वरुणाय च ।

योगेश्वरेभ्यश्च सदा नमस्यामि कृताञ्जलिः ॥ ४३॥ १,८९.५५

नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ।

स्वायम्भुवे नमस्यामि ब्रह्मणे योगचक्षुषे ॥ ४४॥ १,८९.५६

सोमाधारान्पितृगणान्योगमूर्तिधरांस्तथा ।

नमस्यामि तथा सोमं पितरं जगतामहम् ॥ ४५॥ १,८९.५७

अग्निरूपांस्तथैवान्यान्नमस्यामि पितॄनहम् ।

अग्निसोममयं विश्वं यत एतदशेषतः ॥ ४६॥ १,८९.५८

ये च तेजसि ये चैते सोमसूर्याग्निमूर्तयः ।

जगत्स्वरूपिणश्चैव तथा ब्रह्मस्वरूपिणः ॥ ४७॥ १,८९.५९

तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः ।

नमोनमो नमस्तेऽस्तु प्रसीदन्तु स्वधाभुजः ॥ ४८॥ १,८९.६०

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे

रुचिकृतपितृस्तोत्रं नामैकोननवतितमोऽध्यायान्तर्गतम् ।

